**बन्धन** न॰ बन्ध-भावे ल्युट् । निगडादिना संयमने, बधे च। करणे ल्युट् । रज्जौ ।

**बन्धनवेश्मन्** न॰ ६त॰ । कारागारे बन्धनागारादयोऽप्यत्र ।

**बन्धनस्तम्भ** पु॰ ६त॰ । हस्तिसंयमनकाष्ठे आलाने ।

**बन्धु** पु॰ बध्नाति मनः स्नेहादिना बन्ध-उ । ज्ञातौ, मातुल-पुत्रादौ, बन्धुभ्यः पितृमातृत इति स्मृतिः बान्धवे, मित्रे, सगोत्रे, पितरि,मातरि,भ्रातरि, बन्धुजीववृक्षे च।

**बन्धुजीव** पु॰ बन्धुरिव जीवयति अण् स्वार्थे कन्। बन्धुजीववृक्षे। (बांधुआलि) वृक्षभेदे च । [च ।

**बन्धुता** स्त्री॰ बन्धु+संघेत, भावे तल् वा। बन्धुसमूहे, तद्भावे

**बन्धुर** न॰ बन्ध-उरच् । मुकुटे । स्त्रीचिह्ने, तिलकल्के, बन्धुजीववृक्षे, बधिरे,हंसे, विडङ्गे,ऋषभौषधे, वक्रे विहङ्गे च पु॰ । रम्ये, नम्रे, उन्नतानते च त्रि॰ । वेश्यायां, सक्तुषु । स्त्री॰ । बन्ध उरच् । रम्ये त्रि॰ । [त्रि॰

**बन्धुल** पु॰ बन्ध-उलच्। असतीपुत्रे । सुन्दरे, रम्ये, नम्रे च

**बन्धूक** पु॰ बन्ध-ऊक । (बान्धुली)वृक्षे बन्धूकपुष्पसङ्काश'मिति रविप्रणाममन्त्रः रक्तपीतादिपुष्पे मध्याह्ने प्रकाशवति पुष्प वृक्षे, पीतशालके च । [च । ६त॰ । बन्धूककुसुमे न॰ ।

**बन्धूकपुष्प** पु॰ बन्धूकस्येव पुष्पमस्य । पीतशालके वृक्षे, जीरके

**बन्धूलि** पु॰ बन्ध-ऊलि । बन्धुजीववृक्षे ।

**बन्ध्य** पु॰त्रि॰ बन्ध-यत् । कालप्राप्तावपि फलशून्ये वृक्षे । निष्फले, 'अवन्ध्यकोपस्ये'ति भारविः बन्धनीये च त्रि॰ । अपुत्रायां स्त्रीजातौ, वालाख्ये गन्धद्रव्ये च स्त्री॰ ।

**बन्ध्याकर्कोटी** स्त्री॰ बन्ध्याया उपकारिणी पुत्रप्रदत्वात् कर्कोटी । तिक्तकर्कोट्याम् अस्याः पुत्रदायित्वेन बन्ध्योपकारित्वम् । स्वार्थे कन् अतह्रस्वम् । तत्रैव ।

**बभ्र** गतौ भ्वा॰पर॰सक॰सेट् । बभ्रति अबभ्रीत् ।

**बभ्रु** पु॰भृ-कु-द्वित्वम् बभ्र-उ वा। शिवे,विष्णौ, नकुले, बह्नौ, मुनिभेदे, देशभेदे च तद्देशवासिनि ब॰व॰। पिङ्गलवर्णे पु॰। तद्वति त्रि॰। स्त्रियां ऊङ् । खलतौ बक्रकरे पु॰(फरास) ।

**बभ्रुधातु** पु॰ कर्म॰ । स्वर्णे, धुस्तूरे, गैरिके च ।

**बम्ब** गतौ भ्वा॰पर॰सक॰सेट् । बम्बति अबम्बीत् ।

**बर** न॰वृ-अप् । कुङ्कुमे । वृ-अच् । आर्द्रके । अस्तु । ईषदिष्टे अव्य॰। कर्मणि अप् । जामातरि देवादिभ्यः आशास्ये, षिङ्गे, जारे च पु॰ । भावेऽप्। वरणे। गुडूच्यां, त्रिफलायां, मेदायां, ब्राह्म्याम्, विडङ्गेषु पाठायां, हरिद्रायाञ्च स्त्री॰टाप् । शतावर्य्यां स्त्री॰ गौ॰ ङीष् ।

**बर्ब** गतौ भ्वा॰पर॰सक॰सेट् । बर्बति अबर्बीत् ।

**बर्बट** पु॰ बर्ब-अटन् । राजमाषे (बरबटी) । गौ॰ङीष् । तत्रैव व्रीहौ, वेश्यायाञ्च । [अबर्हिष्ट ।

**बर्ह** दाने बधे स्तुतौ वाचि च भ्वा॰ आ॰ सक॰सेट् । बर्हते

**बर्ह** न॰ बर्ह-अच् । मयूरपिच्छे, पत्रे, परीवारे च ।

**बल** जीवने, धान्यावरोधे च भ्वा॰पर॰ अक॰सेट् । बलति । अबालीत् बेलतुः । [अबालीत् अबलिष्ट ।

**बल** दाने बधे निरूपणे च भ्वा॰उभ॰सक॰सेट् । बलति-ते

**बल** जीवने चु॰ उ॰अक॰सेट् घटा॰ । बलयति-ते अबीबलत् त ज्वलादि॰ ण । बलः बालः ।

**बल** निरूपणे चु॰आत्म॰सक॰सेट् । बालयते अबीबलत् ।

**बल** न॰बल-अच् । सैन्ये, देहजे सामर्थ्ये, स्थौल्ये,गन्धरसे,रूपे, शुक्रे, देहे, पल्लवे, रक्ते च। बलयुक्ते त्रि॰ । काके, बलदेवे, वरुणवृक्षे, दैत्यभेदे च पु॰ ।

**बलक्ष** पु॰बलं क्षायत्यस्मात् क्षै-क । शुक्लवर्णे। तद्वति त्रि॰ ।

**बलज** न॰ बलात् जायते जन-ड । क्षेत्रे, पुरद्वारे, शस्ये, युद्धे च । बलजाते त्रि॰ ।

**बलद** पु॰ बलं ददाति दा-क । 'पौष्टिके बलदः स्मृत' इत्युक्ते पौष्टिककर्म्माङ्गे वह्निभेदे । अश्वगन्धायां स्त्री॰। बलदातरि त्रि॰

**बलदेव** पु॰ बलेन दीव्यति दिव-अच् , बलोद्रिक्तो देवो वा शाक॰ । बलरामे । त्रायमाणौषधौ स्त्री॰ ।

**बलभद्र** पु॰बल+अर्श आद्यच् बलो बलवानपि भद्रः सौम्यः । बलदेवे, गवये च । बलेषु भद्रा । त्रायमाणौषधौ स्त्री॰ स्वार्थे कन्। तत्रैव । [यजे रोहिणीनन्दने संकर्षणे रामे ।

**बलराम** पु॰ बलेन रमते रम-संज्ञायां कर्त्तरि घञ् । कृष्णा

**बलवत्** अव्य॰बल+अतिशये मतुप् मस्य वः । अतिशये । 'बलवदपि शिक्षितानामा'मिति शकुन्तला । बलविशिष्टे त्रि॰ । 'क्षीणा बलवती नाडी'ति वैद्यकम् । [षधौ ।

**बलवर्द्धिनी** स्त्री॰बलं वर्द्धयति वृध-णिच्-णिनि । जीवकौ-

**बलविन्यास** पु॰ बलानां सैन्यानां विशेषेण दुर्भेद्यतायै न्यासः स्थापनम् । व्यूहे सेनासन्निवेशविशेषे ।

**बलशालिन्** त्रि॰ बलेन शालते शल-णिनि । बलविशिष्टे ।

**बलसूदन** पु॰ बलं तन्नामकमसुरं सूदयति सूद-ल्यु । इन्द्रे

**बला** स्त्री॰ बलं कार्य्यत्वेनास्त्यस्याः । (वालियाडा) क्षुपभेदे, विश्वामित्रेण रामाय दत्ते अस्त्रविद्याभेदे च ।

**बलाका** स्त्री॰ बलं कम्पनमकति गच्छति अक-अच् । वकभेदे

**बलाट** पु॰ बलमटति ददाति अट-अच् । मुद्गे ।

**बलात्** अव्य॰बलं सामर्थ्यं कारणत्वेनाततति अत-क्विप् । हठादित्यर्थे । पञ्चम्यन्तबलशब्दे नास्य न गतार्थता बलात्कार इत्या-

दिविकृयै तस्यावस्थम्भकीकार्य्यत्वात् ।

**बलात्कार** पु॰ बलात्+कृ-घञ् । बलपूर्व्वककरणे, हठात्करणे च

**बलात्मिका** स्त्री॰ बलमेवात्मा स्वरूपं कारणत्वात् यस्याः स्वार्थे कन् अतइत्त्वम् । (हातिशुड़ा) हस्तिशुण्डीवृक्षे ।

**बलाढ्या** स्त्री॰ बलाय आढ्या । (बेलियाड़ा) क्षुपभेदे ।

**बलानुज** पु॰ अनुजायते अनु+जन-ड इत॰। श्रीकृष्णे।

**बलामोटा** स्त्री॰ बलमामोटयति आ+मुट-अच् । नागदमन्याम् । अयान्तत्वोक्तिः प्रामादिकी तथात्वे ङीप् स्यात् ।

**बलाय** पु॰ बलस्यायः स्थानम् अय-घञ् । वरुणवृक्षे ।

**बलाराति** पु॰बलस्य तन्नामासुरस्यारातिः । इन्द्रे । बलगन्तु प्रभृतयोप्यत्र । [खुल् । पानीयामलके

**बलालक** पु॰ बलाय सामर्थ्याय अलति पर्य्याप्नोति अल-

**बलाहक** पु॰ बलं कम्पनमाजहाति आ+हा-कुन् । मेघे मुस्तके, पर्व्वते, दैत्यभेदे, नागभेदे च । [कन्दः । गुलुञ्चकन्दे

**बलाहकन्द** पु॰ बलं सामर्थ्यमाह्वयति आ+ह्वे-क ताडशः

**बलि** पु॰बल-इन् । पूजोपहारे, ददत 'सौ बलिं चैव निजगात्रात्समुचित'मिति षष्ठी राजग्राह्ये भागे, उपप्लवे, चामरदण्डे, गृहस्थकर्त्तव्यपञ्चयज्ञमध्ये भूतयज्ञे, 'बलिकर्म्म ततः कुर्य्यादिति स्मृतिः । दैत्यभेदे विरोचनपुत्रे च 'येन बद्धो बलीराजा दानवेन्द्रो महाबलो'ति रक्षाबन्धनमन्त्रः । जरया श्लथचर्म्मणि स्त्री॰ वा ङीप् । 'गृहस्थस्तु यदा पश्येत् वलीपलितमात्मन' इति स्मृतिः । उदरावयवे । 'बलित्रयं चारु बभार बाले'ति कुमारः । गुह्यस्थे अङ्कुराकारे मांसपिण्डे, गृहदारुप्रभेदे च (प्राड) स्त्री॰स्वार्थे कन् । तत्र, अतिबलायाञ्च ।

**बलिध्वंसिन्** पु॰ बलिं ध्वंसयति स्वस्थानात् पातयति ध्वन्सणिच्-णिनि । विष्णौ वामनावतारेण हि तस्य तथात्वम् ।

**बलिन**(भ) त्रि॰बलि+अस्त्यर्थे-इन भ वा। जरया शिथिलचर्म्मवति

**बलिन्** त्रि॰ बलमस्त्यस्य इनि । बलवति । उष्ट्रे, महिषे, वृषे, शूकरे, बलरामे कुन्दवृक्षे, कफे, माषे च पु॰ । (वेलियाडा) क्षुपे स्त्री॰ङीप् ।

**बलिपुष्ट** पु॰ बलिना पूजोपहारद्रव्येण पुष्टः पुष-क्त। काके

**बलिप्रिय** पु॰ बलिनं प्रीणाति प्री-क । लोध्रद्रुमे ।

**बलिभुज्** पु॰ बलिं पूजोपकरणद्रव्यं गृहस्थदत्तबलिं वा भुङ्क्ते क्विप् । काके ।

**बलि(ली)मुख** पु॰ बलि(ली)युक्तं मुखमस्य शाक॰ । वानरे ।

**बलिष्ठ** त्रि॰ अतिशयेन बली बलिन्+इष्ठन् । अत्यन्तबलवति । उष्ट्रे पु॰ ।

**बलिसद्मन्** न॰इत॰। पाताले बलिपुरादयोप्यत्र । [प्रान्ते(छांच)

**बलीक** पु॰न॰ बालयति आवृणोति बल ईकन् नि॰ । पटल

**बलीयस्** त्रि॰अतिशयेन बली बलिन्+ईयस्। अत्यन्तबलवति

**बलीवर्द्द** पु॰वृ-क्विप् वर् ई लक्ष्मीश्च वश्च ईवरौ तौ ददाति दा-क ईवर्द्दः बली चासौ ईवर्द्दश्चेति। वृषे ।

**बल्य** न॰बलाय हितं बल+यत् । प्रधानधातौ, शुक्रे, बलसाधने च । अश्वगन्धायाम्, अतिबलायां, प्रसारिण्याञ्च स्त्री॰ ।

**बल्ह** स्तुतौ दाने, बधे, च सक॰ याचने द्विक॰ भ्वा॰ आत्म॰ सेट् । बल्हते अबल्हिष्ट ।

**बष्क(स्क)यि(णी)नी** स्त्री॰मस्क गतौ अयन् पृ॰मस्य वः सस्य वा षत्वम् 'बष्क(स्क)योऽस्यास्ति इनि ङीप् पमध्यत्वे षात्वम् । चिरप्रसूतायां गवि । बष्क(स्क)यं नयतीति नी-ड गौ॰ङीष् पमध्यत्वे पूर्व्व॰णत्वम् । बष्क(स्क)यणी(नी)त्यप्यत्र

**ब(व)ह** दृद्धौ भ्वा॰आत्म॰अक॰सेट् इदित् । बं(वं)हते अबं(वं)हिष्ट । महिवाहर्य्यादयश्चोष्ठ्यादिरितिपाणिनीयाः । दन्त्योष्ठ्यादिरिति वोपदेवः ।

**ब(व)हु** त्रि॰ बं(व)हि-कु नलोपः। त्रिप्रभृत्यनेकसङ्ख्यान्विते, विपुले च । स्त्रियां वा ङीप् ब(व)ह्वी ।

**ब(व)हुकण्टक** पु॰ ब(व)हूनि कण्टकान्यस्य । क्षुद्रगोक्षुरे । (गोखुरी) क्षुपभेदे । [कण्टकारिकायाम्

**ब(व)हुकण्टा** स्त्री॰ ब(व)हवः कण्टाः कण्टकाः यस्याः ।

**ब(व)हुकन्द** पु॰इव॰ । शूरणे (ओल) । कर्कट्यां स्त्री॰ ।

**ब(व)हुकर** त्रि॰ ब(व)हूनि किरति कृ-अच् । (फरास) मार्ज्जनकरे । सम्मार्ज्जन्यां स्त्री॰गौ॰ङीष् । कृ-अच् इत॰। उष्ट्रे । अनेककार्य्यकरे त्रि॰ ।

**ब(व)हुकर्णिका** स्त्री॰ब(व)हवःकर्णा इव पर्णान्यस्य । आखुकर्ण्याम् । [यूथ्यां, चम्पककलिकायां, जीरके च स्त्री॰ ।

**ब(व)हुगन्ध** पु॰ इव॰ । कुन्दुरुके । त्वचे, (तेजपात) न॰ ।

**ब(व)हुगन्धदा** स्त्री॰ ब(व)हुगन्धं ददाति दा-क । मृगभेदे ।

**ब(व)हुग्रन्थि** पु॰ इव॰ । झावुके (झाउ) ।

**ब(व)हुच्छिन्ना** स्त्री॰ ब(व)हु यथा स्यात् छिद्यते स्म छिद्-क्त तस्य, दस्य च नः । कन्दगुडूच्याम् ।

**ब(व)हुतिक्ता** स्त्री॰ ब(व)हु यथा तथा बाहुल्येन वा तिक्ता । काकमाच्याम् ।

**ब(व)हुतिथ** त्रि॰ ब(व)हूनां पूरणः ब(व)हु+डट् तियुक् च। अनेकसंख्याने, 'काले गते बहुतिथे, इत्युद्भटः ।

**ब(व)हुत** अव्य॰ ब(व)हुषु तस् । अनेकेषु कालादिषु ।

**ब(व)हुत्वच्** पु॰ इव॰ । भूर्ज्जपत्त्रवृक्षे । स्वार्थे कन् तत्रैव ।

**ब(व)हुदुग्ध** पु० ब(व)हूनि दुग्धानीव चूर्णानि शुभ्रवर्णत्वात् यस्य । गोधूमे । प्रचुरक्षीरवत्यां गवि, स्नुहीवृक्षे च स्त्री० । स्वार्थे कन् अत ह्रस्वम् । स्नुहीवृक्षे ।

**ब(व)हुधा** अव्य० ब(व)हु+प्रकारे-धाच् । अनेकप्रकारे

**ब(व)हुपत्त्र** पु० ६ब० । पलाण्डौ अनेकपर्णयुक्ते त्रि० । लिङ्गिन्याम्, घृतकुमार्य्यां, तुलस्यां, वृहत्यां, गोरक्षदुग्धायां, जलुकायाञ्च स्त्री० गौ० ङीष् । ततः संज्ञायां कन् । भूम्यामलक्यां, मेथिकायां, महाशतावर्य्याञ्च ।

**ब(व)हुपर्ण** पु० ६ब० । सप्तच्छदवृक्षे तस्य प्रतिपर्णं सप्तसप्तपर्णवत्त्वात् । अनेकपर्णयुक्ते त्रि० । मेथिकायां स्त्री० ङीप् । ततः संज्ञायां कन् । आखुकर्ण्यां स्त्री०टाप् । [वत्त्वात्तथात्वम्

**ब(व)हुपाद्(द)** पु०६ब० । वा अन्त्यलोपः । वटवृक्षे अनेकशिफा-

**ब(व)हुपुत्त्र** ब(व)हवः पुत्त्रा-इव पर्णान्यस्य । सप्तच्छदे । अनेकपुत्त्राइव मूलान्यस्य । शतमूल्यां स्त्री० ङीप् ।

**ब(व)हुपुष्प** पु०६ब० । निम्बवृक्षे । संज्ञायां कन् अत ह्रस्वम् । धातक्यां स्त्री० । [तुल्यप्रचुरलक्षणवत्त्वात् सुश्लक्ष्णे पु०

**ब(व)हुप्रज** त्रि०६ब० । बहुसन्तानवति । शूकरे पु० । प्रजा-

**ब(व)हुफल** पु०६ब० । कदम्बवृक्षे, विकङ्कते, तेजःफले च । अनेकफलयुक्ते त्रि० । माषपर्ण्यां, चविकायां, काकमाच्यां, त्रिपुष्यां, (शशा) क्षुद्रकारवेल्लयां, भूम्यामलक्याञ्च स्त्री० । संज्ञायां कन् अत ह्रस्वम् । भूमिवदर्य्यां स्त्री० । आमलक्यां स्त्री० ङीप् ।

**ब(व)हुमञ्जरी** स्त्री० ६ब० संज्ञात्वात् न कप् । तुलस्याम् ।

**ब(व)हुमल** पु० ६ब० ॥ सीसके । अनेकमलयुक्ते त्रि० ।

**ब(व)हुमूर्त्ति** स्त्री०६ब० । वनकार्पासे । नानाकारवति त्रि०

**ब(व)हुमूल** त्रि०६ब० । अनेकमूलवति । शिग्रौ पु० । संज्ञायां कन् । उशीरे न० । शतावर्य्यां स्त्री० टाप् । माकन्द्यां ङीप्

**ब(व)हुरसा** स्त्री०६ब० । महाज्योतिष्मत्याम् । नानारसवत्यां त्रि०

**ब(व)हुरूप** पु०६ब० । सर्ज्जरसे (धुना) शिवे, विष्णौ, हिरण्यगर्भे, कामे, केशे च । नानारूपवति त्रि० ।

**ब(व)हुरोमन्** त्रि० ६ब० अनेकरोमवति रोमशे । मेषे पु० ।

**ब(व)हुल** त्रि० ब(व)हि-कुलच् नि० नलोपः । अनेकसंख्यान्विते प्रचुरे । ब(व)हूनि लाति ला-क । अग्नौ, कृष्णवर्णे च पु० । तद्वति त्रि० । कृष्णपक्षे पु० 'ब(व)हुलेऽपि गते निशाकर' इति कुमारः । आकाशे न० । नीलिकायां नीलवर्णायां गवि च स्त्री० । कलच् पु० । ब(व)हुलः । प्रचुरे त्रि० । अग्निदैवतत्वात् कृत्तिकानक्षत्रे स्त्री०टाप् ब०व० ।

**बहुलगन्धा** स्त्री० ६ब० । एलायाम् ।

**ब(व)हुलच्छद** पु० ६ब० । रक्तशोभाञ्जने ।

**ब(व)हुलीकृत** त्रि० ब(व)हुल+च्वि-कृ-क्त । (आगड़ा) बुषस्यापसारणेन राशीकृते खलस्थे धान्ये, राशीकृतमात्रे च ।

**ब(व)हुवल्क** पु० ६ब० । प्रियाले । (पियाशाल) ।

**ब(व)हुवाहक** पु० ब(व)हूनि वाहयति अण्, ततः कन्, ण्वुल् वा । श्लेषातके (लोना आना) ।

**ब(व)हुविस्तीर्णा** स्त्री० ब(व)हु यथा तथा विस्तीर्णा वि+स्तॄ-क्त । (कुचुड़) कुचिकावृक्षे । [त्रि०

**ब(व)हुवीज** पु० ६ब० । (आता) आतपे वृक्षे । प्रचुरवीजवति

**ब(व)हुवीर्य्य** पु० ६ब० । विभीतके, (वयड़ा) तण्डुलीयशाके, (नटेशाक) शाल्मलिवृक्षे, मरुवके च । भूम्यामलक्यां स्त्री० ।

**ब(व)हुव्रीहि** त्रि०६ब० । अनेकधान्यादियुक्ते । व्याकरणोक्ते प्रायेण अन्यपदार्थप्रधाने समासभेदे पु० ।

**ब(व)हुशस्** अव्य० ब(व)हु+शस् । अनेकवारानित्यर्थे 'गुणकृत्ये ब(व)हुशो नियोजिता' इति कुमारः ।

**ब(व)हुशल्य** पु० ६ब० । रक्तखदिरे । अनेककीलयुक्ते त्रि० ।

**ब(व)हुशाल** पु० ब(व)हुभिः शालते शल-संज्ञायां कर्त्तरि घञ् । स्नुहीवृक्षे । [युक्ते त्रि०

**ब(व)हुशिखा** स्त्री० ६ब० । जलपिप्पल्याम् । अनेकशिखा

**ब(व)हुसार** पु० ६ब० । खदिरे । अनेकसारवति त्रि० ।

**ब(व)हुसुता** स्त्री० ब(व)हवः सुता इव मूलान्यस्याः । शतमूल्याम् । अनेकपुत्त्रवति त्रि० । [न्तानयुक्ते त्रि०

**ब(व)हुसूति** स्त्री०६ब० । अनेकप्रसववत्यां गवि । ब(व)हुस-

**ब(व)हुस्रवा** स्त्री० ब(व)हु यथा तथा स्रवति स्रु-अच् । शल्लकीवृक्षे । अनेकधा क्षरणवति त्रि० ।

**ब(व)ह्वृच** पु०६ब० अच् समा० । ऋग्वेदे । सूक्ते न० । तदभिज्ञे त्रि० । तत्पत्न्यां स्त्री० । [अबा(वा)ड़िष्ट ।

**बा(वा)ड** आप्लावने सक० स्नाने अक०भ्वा०आ०सेट् । बा(वा)ड़ते

**बाडव** न० बड़वानां समूहः अण् । घोटकसमुदाये । बाड़-घञ् बल-घञ् लस्य डः वा बाड़ो वृद्धिः तं वाति वा-क । ब्राह्मणे पु० । बड़वायां जातः अण् । और्व्वे समुद्रस्थे कालाग्निभेदे पु० । वाड़वाग्न्यादयोऽप्यत्र पु० ।

**बाडवेय** पु०द्विव० बड़वायाः अपत्ये-ढक् । अश्विनीकुमारयोः ।

**बाड़व्य** न० बाड़व+संघे-यत् । विप्रसमुदाये ।

**बा(वा)ण** पु० बण-शब्दे वण-गतौ वा संज्ञायां कर्त्तरि घञ् । शरे, गोस्तने, (बांट) विरोचनसुते दैत्यभेदे, केवले च । शरपुङ्खे स्त्री० । नीलझिण्ट्याम् पु०स्त्री० । मेदिन्यां दन्त्योष्ठ्यादित्वेन पठितः रायमुकुटादयः बणशब्दे इति धातु-

प्रकृतिकत्वमाहुरतोऽस्योभयविधादित्वम् ।

**बा(वा)णलिङ्ग** बाणदैत्येन संपूज्याविसृज्य नर्म्मदायां निक्षिप्ते शिवलिङ्गभेदे । विस्तरो वृहदभिधाने ।

**वाणिज्य** न० वणिजो भावः, कर्म्म वा ब्राह्मणादित्वात् ष्यञ् । क्रयविक्रयादौ 'वाणिज्येन गतस्य मे गृहपते'रिति सा०श्प०

**बाणि(णी)** बण-इ णिच्च । वस्त्रादीनां वपनक्रियायाम् । वा ङीप् । वस्त्रादीनां वपनक्रियायां, वाक्ये, सरस्वत्याञ्च ।

**बा(व)दर** पु० स्त्री० ब(व)दर+स्वार्थेऽण् । कार्पासवृक्षे, ब(व)-दरस्येदं तस्य विकारो वा अण् । कार्पाससूत्रे न० । तद्-वस्त्रादौ त्रि० । [बा(वा)दरिरप्यत्र ।

**बा(वा)दरायण** पु० ब(व)दर्य्यां भवः फक् । वेदव्यासे । इञि ।

**बाध** पु० बाध-घञ् । प्रतिरोधे । न्यायमते स्वाभाववत्पदार्थे । यथा वह्निबुद्धौ वह्न्यभाववान् ह्रदो बाधः । बाध-कर्त्तरि अच् । प्रतिबन्धके त्रि० । भावे घञ् । बोधप्रतिबन्धे, पीड़ने, उपद्रवे च । [चङि न ह्रस्वः ।

**बाध** विहतौ भ्वादि० आत्म० सक० सेट् । बाधते अबाधिष्ट ।

**बाधक** त्रि० बाध-ण्वुल् । प्रतिबन्धके । स्त्रीणां ऋतुकाले प्रजा जननशक्तिप्रतिरोधके रोगभेदे पु० ।

**बाधिर्य्य** न० बधिरस्य भावः ब्राह्मणादित्वात् ष्यञ् । श्रवण शक्तिराहित्ये रोगभेदे । [अपत्ये ।

**बान्धकिनेय** पु० स्त्री० बन्धक्याः अपत्यं ढक् इनङ् च । असत्या

**बान्धव** पु० बन्धु+स्वार्थे, इदमर्थे वाऽण् । बन्धुशब्दार्थे, पितृ-मातृसम्बन्धिनि मातुलादौ च ।

**बाल** पु० न० (वाला) गन्धद्रव्यभेदे । मूर्खे, शिशौ च त्रि० । केशे पु० । अर्श आदित्वादस्त्यर्थे अच् । अश्वशिशौ, अश्ववालधौ, हस्तिवालधौ, नारिकेले, पशुपुच्छे च पु० ।

**बालक** बाल+स्वार्थे कन् । शिशौ, (वाला) गन्धद्रव्ये च । अङ्गु-रीयके न० । अश्वकरिपुच्छयोः, वलये च पु० ।

**बालकप्रिया** स्त्री० बालकं प्रीणाति प्री-क । इन्द्रवारुण्यां (राखालशशा) कदल्याञ्च ।

**बाल(लि)खिल्य** पु० अङ्गुष्ठपर्वमितेषु षष्टिसहस्रसंख्येषु पुल-स्त्यकन्यायां क्रतोः पुत्रेषु मुनिभेदेषु ।

**बालग्रह** पु० ६त० बालानां पीडके उपग्रहभेदे 'बालग्रहाभि-भूतानां बालानां शान्तिकारक'मिति चण्डी ।

**बालतनय** पु० बालास्तनया इव पत्त्राण्यस्य । खदिरे बालद-लकालिपत्त्रादयोऽप्यत्र पु० ।

**बालधि** पु० बाला धीयन्तेऽत्र धा-कि । केशयुक्तलाङ्गूले ।

**बालपुष्पी** स्त्री० बालानि क्षुद्राणि पुष्पाण्यस्याः ङीप् । यूथिकायाम् । स्वार्थे कन् । तत्रैव ।

**बालभोज्य** पु० ६त० । चणके । बालकभक्षणीये त्रि० ।

**बालमूषिका** स्त्री० कर्म्म० । क्षुद्रमूषिकायाम् ।

**बालव्यजन** न० बाला एव व्यजनम् । चामरे । 'कुर्व्वन्ति बालव्यजनैश्चमर्य्यः' इति कुमारः ।

**बालहस्त** पु० बालानां केशानां समूहः बाल+हस्त । केशस-मूहे । बाला हस्त इव यत्र । पशूनां लाङ्गूले ।

**बाला** स्त्री० बालाः केशाकाराः पदार्थाः सन्त्यस्य अच् । नारि केले, हरिद्रायां मल्लिकाभेदे, वलये, त्रुटौ घृतकुमार्य्यां (वाला) गन्धद्रव्यभेदे, अम्बष्ठायां, नीलझिण्ट्याम्, षोडश-वर्षीयायां स्त्रियां, कन्यायाञ्च । स्वार्थे कन् । तत्रैव बालु-कायां, कर्णभूषणे (कानवाला) एलायाञ्च । [त्यप्यत्र ।

**बालि** पु० बल-इन् णिच्च । इन्द्रपुत्रे कपिराजे । णिनि । बाली-

**बालिश** त्रि० बाड-इन् बाडिं वृद्धिं श्यति शो-क डस्य लः । मूर्खे, शिशौ च 'बालिशमालि ! शयान'मित्युद्भटः । बालाः सन्त्यस्य इनि बाली मूर्द्धा शेतेऽत्र शी-ड । उप-धाने न० । [बालिहन्त्रादयोऽप्यत्र पु० ।

**बालिहन्** पु० बालिं बालिनं वा हन्ति हन-क्विप् । रामे

**बालु** पु० बल-उण् । एलबालुकनामगन्धद्रव्ये । स्वार्थे कन् । तत्रैव न० । पानीयामलके पु० । सिकतासु स्त्री० ।

**बालुकायन्त्र** न० ६त० । औषधपाकार्थे यन्त्रभेदे ।

**बालुकी** स्त्री० चु० बल-उक गौरा० ङीष् । कर्कटीभेदे । पृ० नुक् । बालुङ्कीत्यप्यत्र ।

**बालेय** पु० बलेरपत्यं, बलये हितं वा ढक् । रासभे, दैत्यभेदे, अङ्गारवल्लर्य्यां च । कोमले, बलिहिते च त्रि० ।

**बालेयशाक** पु० बलये हितः ढक् कर्म्म० (वामनहाटि) शाकभे

**बालेष्ट** पु० बालानामिष्टः इष-क्त । ब(व)दरे । बालकाभीष्टे त्रि

**बाल्य** न० बालस्य भावः, कर्म्म वा वयोवचनत्वात् ष्यञ् । 'आ षोड़शाद्भवेद्बाल' इत्युक्ते अवस्थाभेदे ।

**बाष्प(स्प)** पु० बाध-प० षत्वं सत्वं वा । नेत्रजले, ऊष्मणि च

**बा(वा)ह** प्रयत्ने भ्वादि० आत्म० अक० सेट् । बाहते अबा-हिष्ट । चङि न ह्रस्वः ।

**बाहु** पु० बाध-कु धस्य हः । भुजे कक्षावध्यङ्गुलिपर्य्यन्तेऽवयवे

**बाहुज** पु० बाहुभ्यां ब्र(ब्र)ह्मबाहुभ्यां जायते जन-ड । क्षत्रिये 'बाहू राजन्यावि'ति श्रुतिः । [बद्धे लौहचर्म्मादौ ।

**बाहुत्र** पु० न० बाहुं त्रायते त्रै-क । अस्त्राघातवारणार्थं हस्त-

**बाहुदा** स्त्री० (करतोया) नदीभेदे । सा हि अवगाहनात् लिखितस्य मुनेः छिन्नहस्तं पुनर्ददाविति पुराणम् ।

**बाहुमूल** न० ६त० । कक्षे (कांक) ।
**बाहुयुद्ध** न० ३त० । मल्लयुद्धे ।
**बाहुल** पु० बहुलानां कृत्तिकानामयं (स्वामी) अण् वह्नौ । बहुलाभि-र्युक्ता पौर्णमासी अण् । कार्त्तिकपौर्णमास्यां स्त्री०। सात्र मासे पुनरण् । चान्द्रकार्त्तिकमासे पु० ।
**बाहुलेय** पु० ब(व)हुलानामपत्यं ढक् । कार्त्तिकेये ।
**बि(वि)ट** आक्रोशे भ्वा०पर०सक०सेट् । बे(वे)टति अबे(वे)टीत्
**बिद्** अवयवे भ्वा०पर०सक०सेट् इदित् । बिन्दति अबिन्दीत्
**बि(वि)न्दु** पु० विदि-उ विद उ नि० वा । अल्पेऽंशे ।
**बिल** भेदने वा चुरा०उभ०पक्षे तु०पर०सक०सेट् । बेलयति ते बिलति । अबीबिलत् त अबेलीत् ।
**बिस** क्षेपे दि०पर०सक०सेट् । बिस्यति । अबिसत्-अबेसीत् ।
**बीभत्स** त्रि० बध-निन्दायां स्वार्थे सन् कर्म्मणि घञ् । पापिनि, जुगुप्सिते, घृणाविषये च । नाट्यादौ प्रसिद्धे जुगुप्सास्थायिभावके रसभेदे, अर्ज्जुने च पु० । तद्रसविषये विकृतमांसादौ त्रि० । उ । बीभत्सुः । अर्ज्जुने पु० ।
**बुक्क** कुक्कुरादिशब्दे कथने च वा चु०उभ०पक्षे भ्वा० पर०सक० सेट् । बुक्कयति ते बुक्कति अबुबुक्कत् त अबुक्कीत् ।
**बुक्क** न० बुक्क-अच् । हृदयस्थे मांसपिण्डे, अग्रमांसे,हृदये च अस्य स्त्रीत्वमपि स्त्रीत्वे टाप् गौ०ङीष् वा । बुक्काग्रातैर्यूवतिनिकटे प्रौढवाक्येन राघेत्युद्भटः । छागे,(बोका) समये, च पु० । शोणिते स्त्री० टाप् । ष्ट० । बुक्कबुक्के अपि हृदये ।
**बुक्काग्रमांस** न०६त० । हृदयस्थे मांसपिण्डाकारे अग्रमांसे ।
**बुट** हिंसायां चुरा०उभ० पक्षे भ्वा०पर०सक०सेट् । बोटयति ते । बोटति । अबुबुटत्-त । अबोटीत् ।
**बुड** त्यागे संवरणे च तु०कुटा०सक० सेट् । बुडति अबुडीत् ।
**बुद्** निशामने भ्वा०उ०सक०सेट् । बोदति ते। अबुदत्-अबोदीत् अबोदिष्ट। क्त्वा वेट् ।
**बुद्ध** पु० बुध-क्त । भगवतोऽवतारभेदे येन वेदतत्कर्मणोर्निन्दा कृता । जागरिते, ज्ञातवति च त्रि० ।
**बुद्धि** स्त्री० बुध-क्तिन् । ज्ञाने, सांख्योक्ते सत्त्वङ्गःखाद्यष्टविधधर्मवति प्रकृतिपरिणामभेदे, अन्तःकरणविशेषे, वेदान्तोक्ते निश्चयात्मकवृत्तिमति अन्तःकरणे च ।
**बुद्धीन्द्रिय** न०६त० । 'मनः कर्णौ तथा नेत्रे रसना त्वक् च नासिके । बुद्धीन्द्रियमिति प्रोक्तमि'त्युक्तेषु इन्द्रियेषु ।
**बुद्बुद** न० बुद्-क० ष्ट० ह्रित्वम् । जलस्य गोलाकारे विकारभेदे
**बुध** ज्ञापने भ्वा०प०सक०अनिट्। बोधति अबौत्सीत् शिष्यं गुरुः
**बुध** ज्ञाने भ्वा०उभ०सक०सेट् । बोधति ते । अबुधत्-अबोधीत् अबोधि अबोधिष्ट । ज्वला० वा ण पक्षे क । बोधः बुधः ।
**बुध** ज्ञाने दि० आ०सक०अनिट् । बुध्यते अबोधि अबोधिष्ट ।
**बुध** पु० बुध-क । पण्डिते, वृहस्पतिभार्य्यायां तारायां चन्द्रेण जनिते पुत्रे ग्रहभेदे, तस्य रोहिण्या प्रतिपालनात् रौहिणेयत्वम् ।
**बुधरत्न** न० बुधप्रियं रत्नं शाक० । मरकतमणौ । [स्नाम्
**बुधा** स्त्री०बोधति ज्ञापयति रोगिणं बुध-ज्ञापने क । जटामां-
**बुधाष्टमी** स्त्री० बुधवारयुताष्टमी शाक० । चैत्रपौषहरिशयनादीतरत्र काले बुधवारयुतायां शुक्लपक्षाष्टम्यां, तत्कर्त्तव्यव्रते च
**बुधित** त्रि० भ्वा०उभ० बुध-क्त इट् । ज्ञाते ।
**बुध्न** न० बन्ध-नक् नलोपः बुधादेशश्च । वृक्षमूले, मूलमात्रे च ष्टयुबुध्नोदराकृतिरिति घटविशेषणं शास्त्रेपूक्तम् ।
**बुन्द्** निशामने भ्वा० उभ०सक० सेट् । बुन्दति ते । अबुदत् अबुन्दीत् । अबुन्दिष्ट । क्त्वा वेट् ।
**बुन्ध** निशामने भ्वा० उभ०सक०सेट् क्त्वा वेट् । बुन्धति ते अबुधत्-अबुन्धीत् अबुन्धिष्ट ।
**बुन्ध** बन्धे चु०उभ०सक० सेट् । बुन्धयति ते अबुबुन्धत् त ।
**बुभुक्षा** स्त्री० भुज-सन्-अ । भोजनेच्छायां क्षुधायाम् ।
**बुभुक्षित** त्रि० बुभुक्षा+तार० इतच् । क्षुधायुक्ते 'बुभुक्षितः किं द्विकरेण भुङ्क्ते इत्युद्भटः ।
**बुल** मज्जने चु० उभ० अक० सेट् । बोलयति ते अबूबुलत् ।
**बुष(स)** न० बुस्यते उत्सृज्यते बुस-उत्सर्गे क ष्ट० वा षत्वम् । (आगडा) तुच्छधान्ये फलरहितधान्ये ।
**बुस** उत्सर्गे दि०पर०सक०सेट् । बुस्यति अबुसत्-अबोसीत् ।
**बुस्त** आदरे अनादरे च चु०उभ०सक०सेट् । बुस्तयति ते अबुबुस्तत् त । [फलस्य त्याज्ये अंशे,(भुषि) मांसपिष्टकभेदे च
**बुस्त** न० बुस्यते नाद्रियते आद्रियते वा बुस्त-घञ् । पनसादि
**बृ** वृत्यां भृतौ च क्र्या०प्रा०पर०सक० सेट् । बृणाति अबारीत
**बे(वे)हृ** प्रयत्ने भ्वा०आत्मने सक०अनिट् । बे(वे)हते अबे(वे)हिष्ट चङि न ह्रस्वः ।
**बोध** पु०बुध-घञ्। ज्ञाने, जागरणे च। ज्वलादि-बुध-ण । ज्ञानवति त्रि० । ण्वुल् । बोधकोऽप्यत्र त्रि० । णिच् ण्वुल् । सूचके त्रि०
**बोधकर** पु० बोधं निशान्ते जागरणं करोति कृ-अच् । निशान्ते प्रबोधकरे वैतालिके । ज्ञापके त्रि० ।
**बोधन** न० बुध-णिच्-ल्युट् । विज्ञापने, कालवशात् गन्धादेर्न्यूनतायां तदुद्दीपने, जागरणे च । 'शयनं बोधनं हरे'-रिति पुराणम् । 'शायाह्ने बोधनं कुर्या'दिति स्मृतिः ।
**बोधनी** स्त्री० बोध्यतेऽनया, अत्र वा बुध-णिच्-ल्युट् ।

पिप्पल्यां तया हि मूर्च्छितो बोध्यते। कार्त्तिकैकादश्यां तत्र हि हरेर्बोधनम्।

**बोधि** पु०बुध-इन्। अश्वत्थवृक्षे, समाधिभेदे च। ज्ञातरि त्रि०।

**बोधितरु** पु० कर्म्म०। अश्वत्थवृक्षे। बोधिद्रुमादयोऽप्यत्र पु०।

**बौद्ध** न० बुद्धेन प्रोक्तमण्। बुद्धप्रणीते निरीश्वरवादे शास्त्रे। तदधीयते इति पुरनण्। बौद्धागमाध्येतरि त्रि०। [पत्-त

**व्युष** उत्सर्गे विभागे च चु०उ०सक०सेट्। व्योषयति-ते अवुव्युषत्

**ब्रण** शब्दे भ्वा०पर०सक०सेट्। ब्रणति। अब्रणीत्-अब्राणीत्।

**ब्र(व्र)तति** स्त्री०प्रतनोति प्र+तन-क्तिच् पृ०पस्य वः। लतायाम् व्रतमिव करोतीति णिच् अति। दन्तोष्ठ्यादित्वमपि।

**ब्र(व्र)ध्न** पु० बन्ध-नक् ब्रधादेशः। सूर्य्ये, अर्कवृक्षे, शिवे, वृक्षमूले च। मेदिनीकरेण दन्तोष्ठ्यवादित्वेन लिखनात्तथा त्वमपि तन्मूलं मृग्यम्।

**ब्र(व्र)ह्मकूर्च्च** न०'अहोरात्रोषितोभूत्वा पौर्णमास्यां विशेषतः। पञ्चगव्यं पिबेत् प्रातः ब्र(व्र)ह्मकूर्च्चमिति स्मृतमि'त्युक्ते व्रतभेदे

**ब्रह्मकोशी** स्त्री० ब्र(व्र)ह्मणः कोशीव। अजमोदायाम्।

**ब्र(व्र)ह्मचर्य्य** न० ब्र(व्र)ह्मणे वेदलाभाय चर्य्यते चर-यत्। वेदज्ञानार्थमुपनयनोत्तराश्रमे, मैथुनराहित्ये च।

**ब्र(व्र)ह्मचारिणी** स्त्री० ब्र(व्र)ह्म चर्य्यतेऽनया चर-णिच् करणे ल्युट्-ङीप् ६त०। ब्र(व्र)ह्मयष्ट्यां भार्ग्याम्।

**ब्र(व्र)ह्मचारिन्** ब्र(व्र)ह्मणे वेदाय तद्ग्रहणाय चरति चर-णिनि। उपनयनानन्तरं प्रथमाश्रमयुक्तेषु विप्रादिषु त्रिषु वर्णेषु, करुणीवृक्षे, मैथुनराहित्यादि ब्र(व्र)ह्मचर्य्यव्रतधारिण्यां स्त्रियां च स्त्री०ङीप्। 'आसीता मरणात् क्षान्ता नियता ब्र(व्र)ह्मचारिणी'ति स्मृतिः। [नकवृक्षे

**ब्र(व्र)ह्मजटा** स्त्री० ब्र(व्र)ह्मणो जटेव संहतशाखत्वात्। दम-

**ब्र(व्र)ह्मज्ञ** त्रि० ब्र(व्र)ह्म वेदं, तुरीयं शुद्धचैतन्यं वा जानाति वेत्ति ज्ञा-क। वेदज्ञे, तुरीयशुद्धचैतन्यज्ञे च।

**ब्रह्मज्ञान** न० ६त०। त्रिगुणावच्छिन्नातीततुरीयशुद्धचैतन्यविषयज्ञाने विस्तरो वृहदभिधाने।

**ब्र(व्र)ह्मण्य** न० ब्र(व्र)ह्मणे वेदाय प्रभवति शुद्धचैतन्यज्ञानाय वा साधु ब्र(व्र)ह्मणोहितो वा यत्। विप्रवेदरक्षककर्त्तरि विष्णौ,'नमो ब्रह्मण्यदेवाये'ति विष्णुप्रणाममन्त्रः। विप्रधर्म्मे ब्र(व्र)ह्मदारुवृक्षे च।

**ब्र(व्र)ह्मतीर्थ** न० ६त०। पुष्करतीर्थे, पुष्करमूले च।

**ब्र(व्र)ह्मत्व** न० ब्र(व्र)ह्मणो भावः त्व। ऋत्विग्विशेषस्य ब्र(व्र)ह्मणो धर्म्मे, शुद्धतुरीयब्र(व्र)ह्मभावे च।

**ब्र(व्र)ह्मदण्ड** पु०६त० विप्रकृते अभिशापरूपे दण्डने 'ब्र(व्र)ह्मदण्डहता ये चे'ति स्मृतिः। विप्रस्य यष्टौ च।

**ब्र(व्र)ह्मदर्भा** स्त्री०ब्र(व्र)ह्मणो दर्भो यन्त्यनमस्याः। यमान्याम्

**ब(व्र)ह्मदाय** पु० ब्र(व्र)ह्मणि(णे) वा वेदाध्ययनसमाप्तौ, विप्राय वा राज्ञा दीयते दा कर्म्मणि घञ्। समावृत्तविप्राय देये धने 'ब्र(व्र)ह्मदायागतां भूमिं हरेयुर्ब्रा(व्रा)ह्मणीसुता' इति स्मृतिः। [कारे वृक्षभेदे।

**ब्र(व्र)ह्मदारु** .पु० ब्र(व्र)ह्मणो विप्रस्य हितः दारुः अश्वत्था-

**ब्र(व्र)ह्मन्** न० वृह-मनिन् वृंहेर्नोऽच्चेति नकारस्याकारे रत्वम्। वेदे, तपसि, सत्ये, तत्त्वे, यथार्थे, तुरीये सर्व्वगुणातीते विशुद्धे चित्स्वरूपे च। हिरण्यगर्भे विप्रे ऋत्विग्विशेषे च पु०। उज्ज्वलदत्तेन दन्तोष्ठ्यादित्वमेव साधितम् मेदिनीकरेण ओष्ठ्यादित्वेन कीर्त्तनात्तथात्वमपि किन्तु तन्मूलं मृग्यम्।

**ब्र(व्र)ह्मनाल** न० काश्यां मणिकर्णिकासमीपस्थे तीर्थभेदे।

**ब्र(व्र)ह्मनिर्वाण** न० ब्र(व्र)ह्मणि निर्वाणं निर्वृतिः। ब्र(व्र)ह्मभावलाभे सकलानर्थनिवृत्तिरूपे परमानन्दे।

**ब्र(व्र)ह्मपर्णी** स्त्री० ब्र(व्र)ह्मेव विस्तीर्णं मूलादारभ्य स्थितानि पर्णा-न्यस्याः ङीप्। पृश्निपर्ण्याम्।

**ब्र(व्र)ह्मपवित्र** पु० ब्र(व्र)ह्मेव वेदोक्तकर्म्मणि वा पवित्रः। कुशे

**ब्र(व्र)ह्मपादप** पु० ब्र(व्र)ह्मणः प्रियः वैदिककर्म्मयोग्यत्वात् विप्रब्र(व्र)ह्मचारिधार्य्यदण्डार्थत्वाद्वा। पलाशवृक्षे।

**ब्र(व्र)ह्मपुत्र** पु०ब्र(व्र)ह्मणः पुत्र इव कपिलवर्णत्वात्। विषभेदे, उत्तरदेशप्रसिद्धे नदभेदे, क्षेत्रभेदे च। सरस्वत्यां नद्यां स्त्री०। तस्याः पितामहजातत्वं पुराणप्रसिद्धम्।

**ब्र(व्र)ह्मपुरी** स्त्री० ६त० ब्रह्मोपासनास्थाने हृदये, तदाधारस्थाने सत्यलोके, काश्यां च।

**ब्र(व्र)ह्मबन्धु** पु० ब्र(व्र)ह्मा विप्रो बन्धुरुत्पादको यस्य। विप्राचाररहिते निन्द्यकर्म्मकारिणि जात्या विप्रे, विप्रतुल्ये भट्टादौ च। [युज्ये च

**ब्र(व्र)ह्मभूय** न० ब्रह्मणो भावः भू-क्यप्। ब्र(व्र)ह्मभावे तत्सा

**ब्र(व्र)ह्मयज्ञ** पु० ब्र(व्र)ह्मनिमित्तकस्तदध्ययनतदध्यापनानिमित्तको यज्ञः। वेदाध्ययनाध्यापनादौ। [हाटि) वृक्षे

**ब्र(व्र)ह्मयष्टि** स्त्री० ब्र(व्र)ह्मणो यष्टिरिवालम्बनत्वात् (वामन

**ब्र(व्र)ह्मरन्ध्र** न०६त० उत्तमाङ्गस्थिते ब्राह्मप्राप्तिहेतुके छिद्रस्थाने। तच्छिद्रेण निष्क्रमणे हि जीवस्य ब्र(व्र)ह्मप्राप्तिः श्रूयते

**ब(व्र)ह्मराक्षस** पु० ब्र(व्र)ह्मा विप्रोऽपि कुकर्म्मभिः राक्षसः। राक्षसरूपतां प्राप्ते भूतभेदे 'अपहृत्य च विप्रस्वं भवति ब्र(व्र)ह्मराक्षस' इति मनुः।

**ब(व्र)ह्मर्षि** पु० ब(व्र)ह्मा विप्रः चतुर्मुखतस्यो वा ऋषिः वेदस्य कर्त्ता । वेदकर्तृषु वशिष्ठादिषु ऋषिषु ।

**ब्रह्मर्षिदेश** पु० ६त० । 'कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाः शूरसेनकाः । एष ब(व्र)ह्मर्षिदेशो वै' इति मनूक्ते, कुरुक्षेत्रादिदेशचतुष्टये । [ब(व्र)ह्मस्वरूपे च ।

**ब(व्र)ह्मलोक** पु० ६त०। ब्रह्माधिष्ठाने भुवने सत्यलोके तुरीय

**ब(व्र)ह्मवर्चस** न० ब(व्र)ह्मणा वेदाध्ययेन तदनुष्ठानेन च कृतं वर्चः तेजः अच् समा०। वेदाध्ययनजन्ये तेजसि 'ब(व्र)ह्मवर्चसकामस्य कुर्य्याद्विप्रस्य पञ्चमे' इति मनुः ।

**ब(व्र)ह्मवादिन्** पु०ब(व्र)ह्म वेदं वदति पठति णिनि। वेदपाठके ब(व्र)ह्म शुद्धं चैतन्यं सर्व्वात्मकतया वदति वेत्ति वा वेदान्तप्रतिपाद्यसर्व्वात्मकब(व्र)ह्मत्वं शुद्धचैतन्यं वदति बोधयति ब(व्र)ह्मबोधके शास्त्रे । [न ज्ञाने ।

**ब(व्र)ह्मविद्या** स्त्री० ६त० शुद्धचैतन्यात्मकस्य ब्रह्मणोऽभेदे-

**ब(व्र)ह्मवि(बि)न्दु** पु० ब(व्र)ह्मणि वेदपाठकाले (बि)विन्दुः । वेदाध्ययनकाले निःसृतजलवि(बि)न्दौ । [संख्ये पुराणभेदे

**ब(व्र)ह्मवैवर्त्त** न० अष्टादशमहापुराणमध्ये अष्टादशसहस्र

**ब(व्र)ह्मशल्य** पु० ब(व्र)ह्मेव सूक्ष्मं शल्यं कण्टकाग्रं यस्य । (वावला) वृक्षभेदे । [ग्रन्थभेदे ।

**ब(व्र)ह्मसंहिता** स्त्री० वैष्णवाचारसिद्धान्ते अध्यायशतात्मके

**ब्रह्मसायुज्य** न० सह युनक्ति युज-क्विप् सयुक् तस्य भावः सायुज्यं ६त० । ब(व्र)ह्मभावे ।

**ब(व्र)ह्मसू** पु० ब(व्र)ह्माणं सूतवान् सू-क्विप् । चतुर्व्यूहात्मकस्य विष्णोर्मूर्त्तिभेदे अनिरुद्धे, तस्यावतारभेदे उषापतौ च

**ब(व्र)ह्मसूत्र** न० ब(व्र)ह्मणि वेदग्रहणकाले उचितं सूत्रम् । यज्ञोपवीते, ब्रह्मप्रतिपादके शारीरकसूत्रे च ।

**ब्रह्महत्या** स्त्री० हन-क्यप् ६त० । विप्रहनने ।

**ब(व्र)ह्महन्** त्रि०ब(व्र)ह्माणं हतवान् हन-क्विप्। विप्रहत्याकारिणि । 'ब(व्र)ह्महा न भवत्यन्यो ब(व्र)ह्महा वृषलीपतिः। यस्तस्यामाहितोगर्भः स तेन ब्रा(व्रा)ह्मणो हत' इत्युक्ते वृषलीपतौ, 'च्युतोत्पतनजिह्वास्तु जीवोतिष्ठाङ्गुलिध्वनि । गुरोरपि च कर्त्तव्यमन्यथा 'ब्रह्महा' भवेदित्यादिस्मृत्युक्तातिदेशिकब(व्र)ह्महत्यापापयुक्ते च पु० ।

**ब(व्र)ह्महुत** न० ब(व्र)ह्मणे विप्राय अतिथये हुतं दत्तम् । नित्यं गृहस्थकर्त्तव्यपञ्चयज्ञान्तर्गतेऽतिथिपूजनरूपे यज्ञभेदे

**ब(व्र)ह्माञ्जलि** पु० ब(व्र)ह्मणे वेदपाठाय अञ्जलिः गुरौ विनयाञ्जलिः, स्वरविशेषज्ञापनार्थं वा अञ्जलिः संकुचितपाणिः। वेदपाठार्थं गुरुनिकटे कार्य्ये विनयाञ्जलौ, स्वरविशेषार्थज्ञापनाय कृतसङ्कोचे पाणिद्वये च ।

**ब्रह्माणी** पु० ब(व्र)ह्माणम् आनयति जीवयति अन-णिच्-अण् पूर्व्व०णत्वम् । ब्रह्मशक्तौ 'हंसयुक्ते विमानेस्था साक्षसूत्रकमण्डलुः। आयाता ब(व्र)ह्मणः शक्तिः ब(व्र)ह्माणी साभिधीयते' इति चण्डी । 'ब्रह्माणी ब(व्र)ह्मजननादि'ति पुराणम् । ब्रह्मशब्दात् ङीप् आनङ् चेति त्वपाणिनीयम्

**ब(व्र)ह्माण्ड** न० ६त० । 'तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् यज्ञे स्वयं ब(व्र)ह्मा सर्व्वलोकपितामहः' इति मनूक्ते ब(व्र)ह्मण उत्पादके अण्डाकारे भुवनकोषे 'ब(व्र)ह्माण्डभाण्डोदरभ्राम्यत्पिण्डितचण्डिमेति वीरचरितम् । तत्प्रमाणस्वरूपादिकं तु वृहदभिधाने वक्ष्यते ।

**ब(व्र)ह्मावर्त्त** पु० 'सरस्वतीदृशद्वत्योर्देवनद्योर्यदन्तरम् । तं देवनिर्म्मितं देशं ब(व्र)ह्मावर्त्तं प्रचक्षते'इति मनूक्ते देशभेदे

**ब(व्र)ह्मासन** न०ब(व्र)ह्मणोध्यानार्थमासनम् । ईश्वरध्यानार्थे आसने स्वस्तिकपद्मासनादौ ।

**ब(व्र)ह्मी** स्त्री०ब्रह्मण इयम् अण् टिलोपः ङीप् वृ०न वृद्धिः । (वामनहाटी) शाकभेदे । [वृहदभिधाने ।

**ब(व्र)ह्मीघृत** न० मेधास्वरबलादिकारके घृतभेदे विस्तरो

**ब(व्र)ह्मोपनेतृ** पु० ब(व्र)ह्माणं विप्रमुपनयते तद्वेतुदण्डहेतुत्वात् उप-नी-तृच् । पलाशवृक्षे 'विप्रस्य पालाशो दण्ड' इति स्मृतिः ।

**ब्रा(व्रा)ह्म** न० ब्रह्मण इदम्, तेन प्रोक्तम् वा अण् टिलोपः । अङ्गुष्ठमूले तीर्थे, तेन हि तीर्थेन द्विजाचमनं विहितमिति तस्य तत्सम्बन्धित्वम् 'प्राग्वा ब्रा(व्रा)ह्मेन तीर्थेन द्विजो नित्यमुपस्पृशे'दिति स्मृतिः। ब(व्र)ह्मणोक्ते अष्टादशपुराणान्तर्गते पुराणभेदे च । विवाहभेदे, पारदे च पु०। सरस्वत्यां, सोमलतायां, ब्रह्मीशाके (वामनहाटि) शाकभेदे च स्त्री० 'आवृत्तानां गुरुकुलात् विप्राणां पूजको भवेत् । नृपाणामक्षयो ह्येष ब्रा(व्रा)ह्मो धर्म्मो विधीयते' इति मनूक्ते राज्ञां धर्म्मभेदे पु० । मातृभेदे स्त्री० ङीप् 'ब्रा(व्रा)ह्मी नारायणी तथेति तन्त्रम् ।

**ब्रा(व्रा)ह्मण** पु०ब(व्र)ह्म वेदं शुद्धं परचैतन्यं वा वेत्त्यधीते वा अण् ब(व्र)ह्मणो जाताविति न टिलोपः। ब्रह्मणो मुखजातत्वात् ब्रह्मणोऽपत्यम् अण् तेन न टिलोपः । विप्रे जातिभेदे । पृक्कायां स्त्री०। 'ब(व्र)ह्म जानाति ब्राह्मण' इत्युक्ते परब(व्र)ह्मज्ञे त्रि०। स्त्रियां ङीप् तत्पत्न्यां स्त्री० ङीप् ।

**ब्रा(व्रा)ह्मणब्रुव** पु० ब्रा(व्रा)ह्मणं जातिमात्रेणात्मानं ब्रूते । 'विप्रसंस्कारयुक्तोऽपि नित्यं सन्ध्यादिकञ्च यः । नैमित्तिकं च

नो कुर्य्यात् ब्रा(ब्र)ह्मण्य व उच्यते' इत्युक्ते कदाचारवति द्विजे । [स्वार्थे कन् । अत्रैव विप्रदण्डे च ।

ब्रा(ब्र)ह्मणयष्टि स्त्री०६त०। वा ङीप् (वामनहाटी) वृक्षभेदे

ब्रा(ब्र)ह्मण्य न० ब्रा(ब्र)ह्मणानां समूहः भावो वा ष्यञ् । विप्रसमूहे । ब्राह्मणधर्मे, विप्रत्वे च ।

ब्रा(ब्र)ह्ममुहूर्त्त पु०ब्र(ब्र)ह्मा देवतास्य अण् टिलोपः कर्म०। अरुणोदयात् प्राग्वर्त्तिनि 'रात्रेश्च पश्चिमे यामे मुहूर्त्तो ब्रा(ब्र)ह्म उच्यते' इत्युक्तेः दण्डद्वयात्मके काले ।

ब्रा(ब्र)ह्मीकन्द पुं० ६त० । ब्रा(ब्र)ह्मी इव कन्दो यस्य । वाराहीकन्दे । [चत् अवोचत ।

ब्रू कथने अदा०उभ०द्विक० सेट् । ब्रवीति-आह ब्रूते । अवो-

## भ

भ न० भा-क । नक्षत्रे, मेषादिराशौ, ग्रहे च । शुक्राचार्य्ये पु० । भण-ड । भ्रमरे, भ्रान्तौ । छन्दोग्रन्थोक्ते आदि-गुरुके अन्त्योपान्त्यलघुयुक्ते वर्णत्रिके च पु० । [च त्रि०।

भक्त पु०न०भज-क्त। अन्ने ओदने । भक्तियुक्ते तदात्मके, विभक्ते

भक्तदास पु० भक्तेन अन्नमात्रलाभेन दासः अङ्गीकृतदास-भावः। पञ्चदशदासान्तर्गते दासभेदे। 'भक्तदासश्च विज्ञेय' इति स्मृतिः ।

भक्तमण्ड पु०न० ६त० । भक्तस्य निस्रावे (माड) ।

भक्ति स्त्री०भज-क्तिन्। सेवायाम् आराधनायां, तदेकाग्रचित्त-वृत्तिभेदे, विभागे,गौण्यां वृत्तौ,उपचारे, अवयवे,भङ्ग्याम्, श्रद्धायाम्, रचनायाञ्च. 'भवति विरलभक्ति'रिति रघुः

भक्तियोग पु० भक्तिरेव योगः एकाग्रचित्तवृत्तिभेदः । तदे-काग्रचित्ततारूपे योगे । [भवात्मके रतिभेदे ।

भक्तिरस पु० भक्तिरेव रस आस्वाद्यः । भक्तिरूपे ध्येयानु-

भक्ष अदने चु०उभ०सक०सेट् । भक्षयति-ते अबभक्षत्-त भ्वादित्वमपीत्येके भक्षति अभक्षीत् ।

भक्ष्यकार पु० त्रि० भक्ष्यं करोति कृ-अण् । भक्ष्यपिष्टकादि-विक्रयोपजीविनि आपूपिके ।

भक्ष्यपत्त्रा स्त्री० भक्ष्यं पत्त्रं यस्याः। ताम्बूल्याम् ।

भक्ष्यालाबू स्त्री० कर्म० । राजालाब्वाम् ।

भग पु०न० भज-घ । सूर्य्ये, अणिमाद्यष्टविधैश्वर्य्ये, वीर्य्ये, यशसि, श्रियां, ज्ञाने, वैराग्ये, योनौ, इच्छायाम् माहात्म्ये, यत्ने, धर्म्मे, मोक्षे, सौभाग्ये, कान्तौ चन्द्रे च । ज्योतिषोक्ते योनिनक्षत्रदैवते पूर्वफल्गुनीनक्षत्रे गुह्यमुष्कयोर्मध्यस्थाने च पु० ।

भगदत्त पु० महाभारतप्रसिद्धे कामरूपदेशाधिपे नृपभेदे ।

भगन्दर पु० भगं गुह्यमुष्कमध्यस्थानं दारयति दृ-खच् मुम् च । स्वनामख्याते रोगभेदे।

भगवत् त्रि० भगं 'ऐश्वर्य्यस्य समग्रस्य, वीर्य्यस्य, यशसः, श्रियः ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गनेत्युक्तम् ऐश्वर्य्यादि-अस्त्यस्य मतुप् मस्य वः । ऐश्वर्य्यादियुक्ते परमेश्वरे, दुर्गायां स्त्री० ङीप् । 'भगवत्या कृतं सर्व्वमिति चण्डी ।

भगाङ्कुर पु० भगे गुह्यस्थानेऽङ्कुर इव । अर्शोरोगे ।

भगिनी स्त्री० भगं यत्नः पित्रादितो द्रव्यादानेऽस्त्य स्याः इनि । सोदरायाम् स्वसरि ।

भगीरथ पु० सूर्य्यवंश्ये दिलीपराजपुत्रे नृपभेदे । येन गङ्गा भूमितलमवतारिता । [र्घुसौरुपहृतमि'ति नाटकम् ।

भग्न त्रि० भन्ज-क्त । पराजिते, खण्डिते च भग्नं 'शम्भुधनु-

भग्नप्रक्रम पु०भग्नः प्रक्रमो यत्र। अलङ्कारोक्ते काव्यदोषभेदे

भङ्ग पु० भन्ज-घञ् । पराजये, खण्डे, भेदे, तरङ्गे, कौटिल्ये, भये, पत्ररचनाभेदे, गमने, जलनिर्गमे च । मातुल्याम्, शणाख्ये शस्ये, त्रिवृत्तायां (तेउडी) विजयाञ्च (भाङ्) स्त्री०

भङ्गि(ङ्गी) स्त्री० भन्ज-इन् पृ० कुत्वम् वा ङीप् । विच्छेदे, कौटिल्ये, विन्यासे, कल्लोले, भेदे, व्याजे च ।

भङ्गुर त्रि० भन्ज-घुरच् । कुटिले, स्वयं भञ्जनशीले, नदीनां वक्रे च । प्रियङ्गौ, अतिविषायाम् च (आतइच्) स्त्री० ।

भङ्ग्य न० भङ्गानां भवनं क्षेत्रं यत् । भङ्गाभवनयोग्ये क्षेत्रे ।

भज भागे सेवायाञ्च भ्वा० उभ०सक०अनिट् । भजति-ते अभाक्षीत्। भेजतुः भेजे ।

भज पाके दाने च चु०उ०सक०सेट्। भाजयति-ते अबीभजत्

भज दीप्तौ चु०उभ०अक०सेट् इदित् । भञ्जयति-ते अबभञ्जत्-त

भजमान त्रि० भज-शानच् । न्यायागतद्रव्यादौ, विभाजके, सेवके च । [भाषणेऽयं घटा० । णिचि भटयति ।

भट पोषणे भ्वा०पर०सक०सेट् भटति । अभाटीत्-अभटीत् ।

भट पु० भट-अच् । योद्धरि, 'तद्भटचातुरीतुरी'ति नैषधम् । वीरे, म्लेच्छभेदे, नीचभेदे, रात्रिञ्चरे च । इन्द्रवारुण्यां (राखालशशा) स्त्री० ।

भटित्र न० भट-इत्र । शूलपक्वे मांसादौ (कावाव) ।

भट्ट पु० भट-तन् । स्तुतिपाठवृत्तिमति (भाट) जातिभेदे स्वामित्वे, वेदाभिज्ञे पण्डिते च ।

भट्टार पु० भट्टं स्वामित्वमृच्छति ऋ-अण् । पूज्ये । संज्ञायां कन् । सूर्य्ये । [नाट्योक्तौ नृपे ।

भट्टारक पु० भट-भाषणे क्विप् तृ-णिच्-ण्वुल् कर्म० ।

**भट्टिनी** स्त्री॰ भट्टं स्वामित्वमस्यास्ति इनि ङीप् । विप्रभार्य्यायाम्, नाट्योक्तौ अकृताभिषेकायां राज्ञः स्त्रियां च ।

**भड** परिभाषणे भ्वा॰आ॰सक॰सेट् इदित् । भण्डते अभण्डिष्ट

**भड** कल्याणभाषणे चु॰उ॰सक॰सेट् इदित् । भण्डयति-ते अबभण्डत्-त ।

**भड** पु॰ भडि-अच् पृ॰ नलोपः । वर्णसङ्करभेदे ।

**भण** कथने भ्वा॰पर॰सक॰सेट् । भणति । अभाणीत्-अभणीत् । चङि वा ह्रस्वः । अबीभणत्-त अबभाणत्-त ।

**भणिति** स्त्री॰ भण-क्तिन् यज्ञादित्वादिट् । कथने । गौडोर्वीशकुलप्रशस्ति भणिते'रिति नैषधम् ।

**भण्टाकी** स्त्री॰ भटि-षाकन् ङीष् । वार्त्ताक्याम्, बृहत्याञ्च

**भण्ट(ण्टू)क** पु॰ भटि-उक, ऊक वा । श्योनाकवृक्षे ।

**भण्ड** पु॰ भडि-अच् । अश्लीलवाक्यभाषके (भांड) 'त्रयो वेदस्य कर्त्तारो भण्डधूर्त्तपिशाचका' इति चार्व्वाकवाक्यम् ।

**भण्डिर(ल)** पु॰ भडि-इरच्, इलच् वा । शिरीषवृक्षे । इलजन्तस्तु । शुभे, शिल्पनि, दूते च ।

**भण्डी** स्त्री॰ भडि-अच् गौरा॰ङीष् । मञ्जिष्ठायाम्, शिरीषे च । स्वार्थे कन् ह्रस्वः । तत्रैवार्थे ।

**भण्डीर** पु॰ भडि-ईरन् । तण्डुलीयशाके, शिरीषवृक्षे च । गौरा॰ ङीष् । मञ्जिष्ठायाम् स्त्री॰ । [मञ्जिष्ठायाम् ।

**भण्डीरलतिका** स्त्री॰ भडि-ईरन् क्षुद्रा लता लतिका कर्म॰ ।

**भद** हर्षे, शुभकथने, प्रीतौ च भ्वा॰आ॰अक॰ सेट् इदित् । भन्दते अभन्दिष्ट । [भन्दत्-त ।

**भद** कल्याणकरणे चु॰उ॰सक॰सेट् इदित् । भन्दयति-ते अब-

**भदन्त** पु॰ भदि-झच् नलोपः । बौद्धभेदे । पूजिते त्रि॰ ।

**भद्र** न॰भदि-रक् नि॰ नलोपः । मङ्गले, मुस्तके, स्वर्णे च ज्योतिषोक्ते ववादितः सप्तमे करणे स्त्री॰ न॰ । महादेवे, वृषे, खञ्जने, कदम्बे, हस्तिजातिभेदे वलदेवे रामचन्द्रे, सुमेरुशैले, स्नुहीवृक्षे च पु॰। ज्योतिषोक्तासु द्वितीयासप्तमीद्वादशीतिथिषु च स्त्री॰। साधौ, श्रेष्ठे च त्रि॰। स्वार्थे कन् । भद्रमुस्तके न॰ । देवदारुणि पु॰ ।

**भद्रकाशी** स्त्री॰ भद्राय काशते अच् गौ॰ ङीष् । भद्रमुस्तायाम्

**भद्रकुम्भ** पु॰ भद्रकारकः कुम्भः । पूर्णकुम्भे, जलपूर्णघटे ।

**भद्रगन्धिका** स्त्री॰भद्रो गन्धोऽस्याः कप् अतइत्त्वम् । मुस्तके

**भद्रचूड़** पु॰ भद्रा चूड़ा यस्य । (बङ्काशिज) वृक्षभेदे ।

**भद्रज** पु॰ भद्राय जायते जन-ड । इन्द्रयवे ।

**भद्रतरुणी** स्त्री॰ भद्रदायिका तरुणीव । कुब्जकवृक्षे ।

**भद्रतुरग** न॰ भद्रास्तुरगा यत्र । जम्बुद्वीपस्य नववर्षमध्ये वर्षभेदे भद्राश्वादयोऽप्यत्र न॰ ।

**भद्रदन्तिका** स्त्री॰ कर्म॰ स्वार्थे कन् । दन्तीवृक्षभेदे ।

**भद्रदारु** पु॰न॰ । कर्म॰ । देवदारुवृक्षे ।

**भद्रनामिका** स्त्री॰ भद्रं मङ्गलं नामयति प्रापयति नम-णिच् ण्वुल् ? त्रायन्तीवृक्षे । [भाद्रपदासु ।

**भद्रपदा** स्त्री॰ ब॰व॰ भद्रस्य वृषस्येव पदं यासाम् । पूर्व्वोत्तर

**भद्रपर्णी** स्त्री॰ भद्रं पर्णमस्याः अजादि॰ टाप् । कटम्भरावृक्षे । प्रसारिण्यां, गाम्भार्य्याञ्च ङीप् ।

**भद्रमल्लिका** स्त्री॰ कर्म॰। मल्लिकाभेदे नवमल्लिकायाम् ।

**भद्रमुञ्ज** पु॰ कर्म॰। शरभेदे ।

**भद्रमुस्तक** पु॰कर्म॰। नागरमुस्तके । भद्रमुस्ताप्यत्र स्त्री॰ ।

**भद्रयव** न॰ भद्रं यवइव । इन्द्रयवे । [ङीप् । गाम्भार्य्याम् ।

**भद्रवती** स्त्री॰ भद्राणि पर्णानि सन्त्यस्या मतुप् मस्य वः

**भद्रवर्म्मन्** पु॰ भद्रं वृणाति वृ-मनिन् । नवमल्लिकायाम् ।

**भद्रवला** स्त्री॰भद्राय वलति चलति वल-अच् । (गन्धभादाल) लताभेदे, गन्धिकायां, माधवीलतायाञ्च ।

**भद्रवल्ली** स्त्री॰कर्म॰संज्ञायां कन् ह्रस्वः अतइत्त्वम् । (अनन्त मूल) । गोपवल्लाम् ।

**भद्रश्रय** न॰ भद्राय श्रीयते श्री-अच् । चन्दनरसे ।

**भद्रश्री** पु॰ भद्रा श्रीर्यस्य । चन्दनवृक्षे ।

**भद्रालपत्त्रिका** स्त्री॰ भद्रायालति पर्य्याप्नोति अल-अच् तादृशं पत्रं यस्याः कन्-अतइत्त्वम् । गन्धाल्याम् (गान्धाल)

**भद्राली** स्त्री॰ भद्रायालति पर्य्याप्नोति अण् गौरा॰ ङीष् । गन्धाल्याम् (गान्धाल) [दीर्घः । कट्फलवृक्षे ।

**भद्रावती** स्त्री॰ भद्र-अस्त्यर्थे मतुप् मस्य वः संज्ञायां पूर्व्वपद

**भद्राश्रम** पु॰ ६त॰ । चन्दने । [नृपासने ।

**भद्रासन** न॰भद्राय लोकक्षेमायास्यतेऽत्र आस-आधारे ल्युट् ।

**भम्भराली** स्त्री॰ भमित्यव्यक्तशब्दस्य भरमालाति स्वहाति आ-ला-क गौ॰ङीष् । (डांश)मक्षिकायां । स्वार्थे कन् । तत्रैवार्थे

**भय** न॰बिभेत्यस्मात् भी-अच् । भयहेतौ । भावेऽच् । दैन्यात्मके, परतः स्वानिष्टसम्भावनारूपे वा चित्तवृत्तिभेदे, नाटकप्रसिद्धे रसभेदे च । [रसभेदे, डुण्डुलविहगे च पु॰।

**भयङ्कर** त्रि॰ भयं करोति कृ-अच् मुम् च । भयजनके,

**भयनाशिनी** स्त्री॰ भयं नाशयति नश-णिच्-णिनि । त्रायमाणालतायाम् । च । भयङ्करे त्रि॰

**भयानक** पु॰ बिभेत्यस्मात् भी-आनक । व्याघ्रे, राहौ, रसभेदे

**भर** पु॰ भृ-अप् । अतिशये । कर्त्तरि अच् । भरणकर्त्तरि त्रि॰

**भरण** न॰ भृ-ल्युट् । वेतने, पोषणे, धारणे च । अस्मिन्-